# स्वरपञ्चाशत्

अतीन्द्रियार्थविज्ञानं प्रणम्य ब्रह्मशाश्वतम्
तैत्तिरीयपदादीनां वक्ष्यामि स्वरलक्षणम् १
उदात्तश्चानुदात्तश्च वर्णानां प्राकृतौ स्वरौ
स्वरिताश्च द्विधोच्यन्ते धृतः कम्पश्च सांहितः २
तुल्यस्वरः सरूपार्थे पदे भेदेऽपि तत्सुपाम्
द्विरुक्तावग्रहेऽप्येवं द्विधेड्यांशे विभक्तिजे ३
उदात्त एक एवास्यादीड्येऽप्येकपदे स्वतः
नित्यं प्लुतश्चोदात्तस्यान्नान्ते त्वासीच्च विंदति ४
इयं परिभाषा
द्व्युदात्तो वावशब्दस्यादस्मै पूर्वं च वोढवे
तवै शब्दान्तमीड्येऽपि बंबा विश्ववयः श्रुतिः ५
वनस्पत्यादयः शब्दा असंबोधनतद्धिताः
बृहस्पतिः समासेऽपि शुनःशेपः शचीपतिः ६
अग्ना विष्णू इन्द्रा विष्णू नक्तोषासोषासानक्ता
शण्डामर्काविध्माबर्हिर्नाभानेदिष्ठाग्नीषोमौ ७
शुनासीरनराशंसौ तनूनप्त्रे तनूनपात्
द्यावापृथिवी शुक्रामंथ्यान्पात्रां गापरूंषि च ८
वरुणान्तास्त्रयः शब्दा मित्राग्नीन्द्रपदादयः
त्रयः शब्दा द्विरूपश्च सत्रर्तुस्थाः प्रजादयः ९
यज्ञपता उत्र्युदात्तान्यग्ना इन्द्राबृहस्पतिः
इत्यनेक उदात्ताधिकारः समाप्तः
तुल्यस्वरापवादम्
अनुदात्तस्तृतीयादावेकारस्सुप्तवानुताम् १०
गवादीनां तृतीयाद्या अप इत्यादयश्शसि
आद्युदात्तो मृगे कृष्णः प्रादयश्चाभिवर्जितः ११
अन्तो जन्तः शरसान्तं ब्रह्मशब्दो न पुंसके

तदाद्यानयदेत्युच्चैर्द्वितीयं त्वेतदादिषु १२
मेध्या क्षेम्याय गृह्यये त्याद्युदात्ताः परेऽन्यथा
अन्तोदात्तं तु दीर्घाद्यमादित्यारण्यमासुरम् १३
हव्यं वेदो ब्राह्मणश्च हविस्तृणजजादिषु
अन्धो जन्तोनुदात्तादिः पक्षस्कन्धस्तथा विधिः १४
एवमर्यमपूर्वायुस्तथासि द्वयमध्यगः
तुल्यस्वराधिकारो द्वितीयससमाप्तः
एकादेशादुदात्तत्वेप्यनुदात्ता अवग्रहाः १५
तिङन्ते चाल्यवन्ते चाद्युपसर्गा अभीत्वरीः
प्रोक्षणं वीक्षमाणाय प्रार्पणः प्रायणांजनम् १६
प्रोक्षण्युपाकृतश्रुत्योः परोच्यः प्रैषमेषु च
आयनायेति विश्वाहामादं क्रव्यादमित्यपि १७
अग्धाहुतास्तमसना द्वित्तं तिक्तांजसायनी
अन्नादनग् हुताद्यायेत्यग्नीदं न्नाद्यशब्दयोः १८
हुतामुतादस्वार्थैतामर्थे तश्चरिशादसे
अपोंभनादनूच्यानि परीध्योपाकृतं तथा १९
सर्वानुदात्तान्युस्विच्चिदीं हस्मैवचवाघसीम्
येयुष्मदस्मयोस्तेमामेत्वावान्नौ च वोनसौ २०
एनादेशश्च नैनेति त्वं वेदेङ्येऽपि तिङ्पदम्
क्वचित्तिङन्तमवगौ हतस्वः करितीदृशम् २१
संबोधनानीदं शब्देभ्यामादौ द्व्यक्षरं क्वचित्
नार्थे समानवाक्यस्थे पृथिव्यां लोक एव वा २२
त्वः समः सर्वनामत्वे यथा पादान्तवर्ति च
घृतेनाहुत षष्ठीं च संबोधनपरा तथा २३
सर्वानुदात्तापवादम्
पादवाक्यादि भूतेषु तेषूदात्तोऽपि विद्यते

आदौ संबोधनस्योच्चैस्तिङ्दौ द्यासुबादिषु  २४
मन्त्रवद्ब्राह्मणे नीचैर्विधेश्च न पचन्त्विति
वाक्यादिवदधो पूर्वमादेरामन्त्रिताच्चतिङ्  २५
युक्तं यदि हयच्छब्दैस्तिङन्तं स्यादुदात्तवत्
नेत्कुविच्छब्दयोर्योगे च वेति प्रथमा क्रिया  २६
क्रियानुषङ्गा द्वित्वेऽपि तथान्यत्रापि दृश्यते
द्वित्वं लक्षणलक्ष्यत्वे स्याद्विभागेऽपि कर्मणाम्  २७
अर्था विभागे वाक्यैक्यं क्वाशत्राद्यानभेदकाः
यथा न निहतं हेतुरेवं शब्दव्यवायि च  २८
यत्तद्युक्तैर्न संबन्धं पूर्वयोगी न चोत्तरैः
यथायद्वादशो द्यामं द्रव्यार्थे तत्पराणि च  २९
केचित्वतीत्य सम्बन्धं स्तिङंत व्यवहिता अपि
प्राक्तच्छब्दाद्यथा युक्तं हि चानेकेन दृश्यते  ३०
उदात्तादनुदात्तानां माद्यस्वार्यपदे धृताः
विवृत्तौ हल्व्यवायेऽपि स्वारोदात्तपरो न तु  ३१
अजाश्रयत्वाल्लुप्यन्ते यणा देशेऽपि तत्स्वराः
लुप्तादुदात्ता निहतो नित्यस्वरित उच्यते  ३२
उकारयोश्च प्रश्लेषपदोदैक्यं गतेप्यते
उदात्तौ तद्युतावन्यावन्यत्रैकी कृते सति  ३३
नित्यस्वारस्वारपरः कम्पोत्यार्थे निहत्यनु
स्वायम्भुवे तूदात्तादि स्यादुदात्तपरोऽपि सः  ३४
नित्यस्वरित ईङ्येऽपि द्रष्टव्योऽक्षरसंधिना
सुबन्तादौ च नामान्ते विभक्ता चेति स त्रिधा  ३५
स्ववर्चीव्यस्तं जुह्वास्य सून्नीयादिषु सांहितः
यवकारान्तसंयोगे युक्तः सर्वस्तथा भवेत्  ३६
न्यङ्यं चंव्युप्तकेशाय क्यात्क्वलादिषु दृश्यते

अः कारान्तोऽनुदात्तादावकारश्च सुबादिगः ३७
सौर्योदूथ्यश्च वैदेह्य इति नापूर्वयद्वयात्
मह्यै मेष्यै बृहत्यै च कुह्नायम्यै पका तथा ३८
अराद्यौ चैव सेनान्ये प्रफर्व्यङ्गौर्यमित्यपि
याज्यानुवाक्यश्चान्ते स्यव्यान्ते त्र्यक्षरे तथा ३९
ष्यान्तेतीड्येनक्ष्यशब्दे वर्ष्यभ्रातृव्यशब्दयोः
मध्योदात्तं यद्भविष्यत्स्यादाव्यमुपहव्यजम् ४०
दक्षिणास्य सुवर्गाद्यं दिवाकीर्त्ये न पूर्ववत्
एवं वीर्यमद्वीर्यं च गृह्या इत्यर्य एनसि ४१
अन्वाहार्यममावास्यं कार्ष्मर्यं न त्ववग्रहे
उक्थ्यशब्दस्तथोक्थ्याग्रान्पार्या वार्या सह श्रुतौ ४२
मन्त्रे पन्थ्या च सक्थ्यौ च दुर्यो च क्वचिदन्यथा
सव्या रक्षं प्रपथ्याय पङ्क्त्या सह परं तथा ४३
रुद्र ऊर्म्यादयो द्वन्द्वा मेघ्या विद्युत्ययोस्तथा
काट्यो लिप्य हरित्या चेरिण्यानीप्य सिकत्ययोः ४४
ईड्यस्यान्ते वाह्यं ग्राह्य ऊह्यं चाय्यं ग्राभ्य लंभ्यम्
हार्यंबं ध्यातप्यावाप्य श्लोक्या तङ्क्ये देवताध्र्यम् ४५
तर्प्या वृत्त्यै निकोश्याभ्यामुपाधार्येत्यवग्रहः
पल्वल्यावट्यशब्दौ च वान्या संभार्य शब्दयोः ४६
ज्योतिष्याव्यंग्रहीतव्याः वरूद्योपी च्यबर्स्वयोः
शीर्षण्योष्मण्यकर्मण्यामत्यंपस्ताविकर्ययोः ४७
ऊण्योः सृण्या च व्याधाय्ये विश्येष्वाश्यंबिल्वोखल्वाः
निष्टक्र्याक्र्यं शिक्यं पाक्या शीर्यानुर्यंकार्योदर्ये ४८
स्नावन्यासन्याद्राजन्याधान्यं कन्यजघन्ययोः
उर्वर्याय सवात्यौ च गवीन्याविति तादृशाः ४९
द्वादश्यांकशिपव्याद्यादूत्यं वध्वा हृदय्यया

सक्थ्ये जुह्वे च मंडूक्या स्वर्यंतन्वा शमी श्रुतिः ५०
नाध्यासितव्यान्तक्त्याश्च कुश्यौनायास्य च स्ययोः
सादन्यं सपरं संख्या तथा रथ्याकरुण्ययोः ५१
न्यङ्स्वर्युज्यं चिदा नाव्या ससौम्यश्चेति तादृशाः
अन्येऽप्यध्ययनाद्बोध्या अरुणोपनिषत्स्वराः ५२

इति स्वरपञ्चाशत्

Reference:

Svara Pañcāśat, Manuscript #4378h in *An Alphabetical Index of Sanskrit, Telugu and Tamil Manuscripts in the Sri Venkateswara University Oriental Research Institute Library, Tirupati,* Tirupati: Sri Venkateswara Oriental Research Institute, 1956, iv, 369 pp. Grantha script on palm leaves, 3 folios.

Svara Pañcāśat, Mysore Governmental Oriental Manuscript Library, Telugu script on palm leaves, 4 folios, (P 4772/13).